गुरुकुल शताब्दी प्रकाशन माला—द्वितीय पुष्प

# गुरुकुल काङ्गड़ी विश्वविद्यालयीयम्

## (स्वोपज्ञ हिन्दी-अनुवादसहितं काव्यम्)

*रचयिता*

**डॉक्टर हरिनारायण दीक्षितः**

प्राक्तन प्रोफेसर एवं संस्कृत विभागाध्यक्ष

तथा पूर्वकलासङ्कायाध्यक्ष,

कुमाऊँ विश्वविद्यालय,

नैनीताल (उत्तराञ्चलम्)

2002

**श्री स्वामी श्रद्धानंद अनुसंधान प्रकाशन केन्द्र**

गुरुकुल कांगड़ी विश्वविद्यालय

हरिद्वार

रचना : गुरुकुल काङ्डी विश्वविद्यालयीयम्
(स्वोपज्ञ हिन्दी-अनुवादसहितं काव्यम्)

रचयितानुवादकश्च : डॉ हरिनारायण दीक्षित

प्रथम प्रकाशन वर्षम् : 2002 ईशवीयम्

मूल्यम् : 90.00

प्रकाशक : श्रद्धानद अनुसंधान प्रकाशन केन्द्र
गुरुकुल कागड़ी, हरिद्वार

मुद्रण-व्यवस्था : क्वालिटी प्रिंटर्स, दिल्ली-110093

## *समर्पणम्*

सततं कृतकार्याय भारतोन्नतिकाम्यया।
सङ्गमकाङ्क्षिणे देशे ज्ञान-विज्ञान-गङ्गयोः ॥
ज्ञानवारिजसूर्याय धर्मद्वेषाग्निवारिणे।
भेदमेघसमीराय समाजोद्यानमालिने ॥
सुधिये राष्ट्रभक्ताय भारताय हुतात्मने।
समाजे कीर्त्तिशेषाय स्वकीर्त्याद्यापि जीवते ॥
त्यागिने स्वामिने तस्मै श्रद्धानन्दाय वाग्मिने।
मानसोत्थमिदं स्वीयं काव्यं समर्पयाम्यहम् ॥1-4॥

**–हरिनारायण दीक्षितः**

भारत देश की उन्नति की कामना से सदा कार्य करते रहनेवाले, अपने देश में ज्ञान और विज्ञान की गंगाओं को मिलाकर प्रवाहित करने की आकांक्षा रखनेवाले, ज्ञान के कमल को विकसित करने के लिए सूर्य बन जानेवाले, धार्मिक विद्वेष की आग को बुझाने के लिए पानी बन जानेवाले, भेदभाव के बादलों को भगा देने के लिए तेज हवा बन जानेवाले, समाजरूपी बागीचे को सुव्यवस्थित करने के लिए माली बन जानेवाले, अच्छी बुद्धि वाले, अपने राष्ट्र पर भक्तिभाव रखनेवाले, अपने भारत राष्ट्र के हित के लिए अपने प्राणों की बलि दे देनेवाले, समाज में अभी भी सब ओर फैली हुई

कीर्तिवाले, अपनी कीर्ति के रूप में आज भी जीवित रहनेवाले, त्यागमय जीवन जीनेवाले और वाणी का अच्छा प्रयोग करनेवाले उन स्वामी श्रद्धानन्द जी को मैं मानस से उत्पन्न अपने इस काव्य को समर्पित करता हूँ ॥1-4॥

**–हरिनारायण दीक्षित**

दिनांक 17 फरवरी, 2002 ईशवीय

# आमुखम्

वेदविद्योद्भासकमहर्षिदयानन्दानुगामिन शुद्धिप्रचारचातुर्यजीवक गुरुकुल स्वरूपप्रकाशकम् अमरहुतात्मान स्वामिश्रद्धानन्द समवेक्ष्य समीक्ष्य च दिदृक्षभिर्वार वार सम्प्राप्त परमानन्दः। महर्षिणा दयानन्देन वैदिकमार्गानुगमनमहत्त्वमुद्गिरता वेदधिया गुरुकुलपद शिक्षाप्रसगे प्रयुक्तम् स्वामिश्रद्धानन्देन ऋषिवरचरणसन्निधिमवाप्य गुरुकुलशब्द-स्यार्थमभिज्ञाय प्राक्तनगुरुकुलपरिपाटी मदृष्टा सप्रथिता च। गुरुकुल कांगडीग्रामपार्श्वे गंगायास्तटे सस्थाप्य शिक्षाक्षेत्रे काप्याभिनवा ज्योतिष्मती विद्यापरम्परा सस्थापिता सजीविता च। स्वामिश्रद्धानन्दसस्थापितस्य गुरुगुलस्य कीर्ति शनै· शनै· सकलाना भारतीयपरम्परानुरक्तचित्ताना पवित्राचाराणा मानवाना जीवने जीवनरसमुद्गिरन्ती प्रसृता। गुरुकुलस्य विद्याविधान वेदाभ्यासासक्ताना ब्रह्मचारिणा तेजस्विता प्रगल्भता बुद्धिवैभव विचित्रा चारित्र्यपद्धतिञ्च द्रष्टु सर्वाभ्यो दिग्भ्यो जना· समागत्य स्वामिश्रद्धानन्दस्य यशोगान गाय गाय नितरामानन्दमनुभवन्ति स्म। गुरुकुलप्रथा प्रथयितु येन धनवता धन दत्त तेन प्रथिता स्वधनस्य पवित्रता। येन गीतानुरागिणा सर्वहुत स्वामिन श्रद्धानन्दस्य यशोगीत समुद्गीत तेनोन्नीत स्वकीय जीवनम्। येन मनीषिणा दीप्तिमत्या स्वधिया गुरुकुलमुद्भासित तेन निर्मलीकृता सार्थकता नीता च शब्दवत्ता। येनापि ऋषिकल्पेन कर्मप्रकल्पनदक्षेण गुरुकुलस्य दर्शन कृत तेन प्रदर्शितमृषित्वम्। येनोपदेष्ट्रा विष्वक् प्रचारेच्छा बलवतीं कर्त्तु गुरुकुले व्युषित तेन वैदिकप्रचारनैपुण्यमधिगतम्। येन गुरुकुलप्रकरणे स्वलेखनी गतिमतीं कर्त्तु कामना कृता तेनानवरत समाराधिता सरस्वती। शब्दविद्यापारङ्गतैर्मनीषिभि कदाचिद् गद्यमय्या वाचा कदाचित् पद्यमय्या मधुरया वाचा कदाचित् गद्यपद्यमय्या वाचा गुरुकुलमभिवर्णितम्। पर सस्कृतभाषाया गुरुकुलस्य मधुर चित्रण सम्प्रति येन कृत तन्नामास्ति डॉ हरिनारायणो दीक्षितः।

डॉ. हरिनारायणदीक्षितेन यद्यपि बहवो ग्रन्था ग्रथिता· प्रणीता, ते ग्रन्था सन्ति महाकाव्यपदवाच्या आलोचनात्मकपरम्परासपोषकाश्च। समतीताया नेदीयस्या कालकलाया सकृद् डॉ दीक्षितेन सह वार्ता समजनि। तस्या वार्ताया मयोदीरित यत् कविप्रवर! तव वाक्प्रसर· कविताया निर्बाधस्तर्हि स्वामिश्रद्धानन्दसंस्थापितमद्भुत गुरुकुलमुद्वीक्ष्य कथ न कवितावल्लरी ते भवति फलवती। निसर्गनि·सृता मदीया वाचमाकर्ण्य तेन कवितावल्लभायमानेन मन्दस्मितेन स्वीकृतिरदायि। गुरुकुलकागडी विश्वविद्यालयीय

काव्य तेन प्रतिभावता निर्माय रमणीयता लोकोत्तरचमत्कारकारिणी परिकल्पिता। अस्मिन् काव्यसरसि गुरुकुलस्य भूतेतिवृत्तगन्धयुतानि वर्तमानवृत्तान्वितानि मधुराणि पद्यकमलानि चकासति। प्रथम कविना स्वामिश्रद्धानन्दस्य गुरुकुलसंस्थापनेच्छा वर्णिता। गुरुकुलेच्छा पूरयितु तेन महात्मना यानि दु सहानि कष्टानि अनुभूतानि तानि वर्णितानि। कवे स्वामिश्रद्धानन्दे श्रद्धाभाव उत्तरोत्तर विवर्धत एव। अत काव्यमिद तेन कविना न स्वपितृचरणयो समर्पितम्, आत्मगुरोश्चरणयोरपि नार्पितम्, अपरस्य कस्यचिदपि स्वजनस्य करयोर्न दत्तम् अपितु स्वामिश्रद्धानन्दस्य चरणकलयोः समर्प्य तेन समनुभूत' प्रभूतानन्द.। गुरुकुलमुपागता श्रद्धालव किमिच्छन्ति ज्ञातुमित्यस्मिन् प्रसगे पद्य सरलं विद्यते–

**संस्थापकः कोऽस्य किमस्य लक्ष्यं**
**छात्राः कियन्तो गुरवः कियन्तः।**
**केऽध्याप्यमाणा विषयाश्च सन्ति**
**कया च रीत्या क्रियते प्रबंधः।।**

अमीषा प्रश्नानामुत्तरकाले कविना गुरुकुलसंस्थापकस्य स्वामि श्रद्धानन्दस्य अविकल वर्णनमकारि। आचार्यरामदेवस्य प्रभावकर वर्णन विधाय समेषाम् आचार्याणामुल्लेख' कृत.। गुरुकुलस्नातकै. समावर्तनसस्कारानन्तर स्वस्वक्षेत्रेषु या ख्यातिर्गुरुकुलस्य प्रख्यापिता तद्वर्णनमतीवचारुतया कृतम्।

काव्यमिद विष्वक् प्रसरेत्। भारतीया जना वैदेशिका जनाश्च सस्कृत माध्यमेन यदि गुरुकुलविषयस्य ज्ञानरस पातुमिच्छन्ति तर्हि सर्वैरेवात्र कविवरेण डॉ. हरिनारायणदीक्षितेन विनिर्मिते काव्ये रुचि' परिवर्धनीया। पाठका' काव्य पठित्वा गुरुकुलं ज्ञास्यन्ति अनुभविष्यन्ति तदानन्दम्।

**प्रो. वेदप्रकाशः शास्त्री**
*आचार्य. कुलपतिश्च*
*गुरुकुलकांगडीविश्वविद्यालयस्य*

तीर्थं हरिद्वारमुपागतस्य
कस्यापि पत्नीसहितस्य चित्ते।
संन्यासि-सन्दर्शन-तृप्तभूतेऽ
भूद् विश्वविद्यालयदर्शनेच्छा ॥1॥

मिथोऽथ निश्चित्य, च दम्पती तौ
मठांश्च घाटांश्च परित्यजन्तौ।
ज्ञानस्य गङ्गां च सुचिन्तयन्तौ
तदीयमार्गे चलितुं प्रवृत्तौ ॥2॥

त्रिचक्रयाने कृतरोहणौ तौ
सुखेन कालेन घटीमितेन।
सम्प्रापतुस्सीमनि विश्वविद्या-
लयस्य पूते च रसालरम्ये ॥3॥

त्रिचक्रिकाचालक–पान्थबन्धुं
स्विन्नाननं च त्वरया श्वसन्तम्।
अतोषयद् भूरि स दीनबन्धु
र्दत्त्वा तदिष्टाधिकरूप्यकाणि ॥4॥

ज्ञानप्रियौ ज्ञानपथं दिदृक्षू
ज्ञानं च पूतं हृदि मन्यमानौ
तौ विश्वविद्यालयदर्शनोत्कौ
शनैः शनैः प्राविशतां तदन्तः ॥5॥

मन्दानिलोद्वेलितबाहुशाखाः
तद्–राजमार्गीयतटस्थवृक्षाः ।
सुगन्धिभिस्तत्र सुमैः पतद्भिः
तत्स्वागतं चक्रुरिवातिथेयाः ॥6॥

गुञ्जन्त आसन्बहवो मिलिन्दाः
पुष्प्यत्प्रसूनासु लतासु तस्मिन् ।
मिषेण तेषां वनिता यथा तास्-
तत्स्वागते गातुमिवारभन्त ॥7॥

अग्रे चलद्भ्यामिह दम्पतिभ्यां
दृष्टं यदेकत्र रसालमूले ।
सन्तिष्ठते कोऽपि जनस्सुवेषो
ग्रन्थं दधानश्च निजैकपाणौ ॥8॥

वर्णेन गौरो वपुषा च लम्बो
मनोज्ञकेशश्च विशालभालः ।
मत्वा विशिष्टावतिथी इमौ द्वौ
स उत्थितीभूय ननाम भक्त्या ॥9॥

पप्रच्छ चेमौ कुत आगतौ स्तो
भद्रौ भवन्तौ किमु वाञ्छतश्च ।
काञ्चात्र सेवां भवतोर्विदध्या-
माभाति चाद्यो भवदागमोऽयम् ॥10॥

यत्राकृतिस्तत्र गुणा वसन्ती-
त्युक्तिं सदर्थामवबुध्यमानौ ।
तत्तुष्टचित्तौ च तदन्तिकात्तौ
जिज्ञासमानावथ चोपविष्टौ ॥11॥

कृषाणवेषस्स जनोऽब्रवीत्तं
हे साधुचेतः ! शृणु कामनां नौ ।
आवां हरिद्वारपुरी-विशेषान्
समागतौ द्रष्टुमतीव दूरात् ॥12॥

दृष्टा विशेषा बहवश्च तेष्व-
द्य विश्वविद्यालयदर्शनेच्छा ।
समुत्थितानीतवतीह चावा-
मिच्छावशो भ्राम्यति जीवलोकः ॥13॥

विद्यालयोऽयं तव विश्वपूर्वो
मन्ये महानस्ति समग्रराष्ट्रे ।
तन्मेऽत्र सम्प्राप्तवतोऽद्य कर्णौ
श्रोतुं समुत्कावितिहासमस्य ॥14॥

संस्थापकः कोऽस्य किमस्य लक्ष्यं
छात्राः कियन्तो गुरवः कियन्तः।
केऽध्याप्यमाना विषयाश्च सन्ति
कया च रीत्या क्रियते प्रबन्धः ॥15॥

अत्रत्य आचार्य्यपदे च कस्कः
प्रतिष्ठितोऽभूदधुना च कोऽस्ति।
क्षेत्राय राष्ट्राय शुभां च दृष्टिं
कां विश्वविद्यालय एष दत्ते ॥16॥

किमेष सूतेऽद्य च विश्वविद्या-
लयस्समाजाय जनान् सुसभ्यान्।
कर्त्तव्यनिष्ठान्निजदेशभक्तान्
संरक्षकान् भारतसंस्कृतेश्च ॥17॥

प्रश्ना इमे मेऽत्र मनो विशन्ति
समाधिमेषां च कुतोऽपि लिप्से।
त्वमेव चेद्वत्स ! करोषि पूर्णा-
मिच्छामिमां तत्सुखमाप्स्यसि त्वम् ॥18॥

ज्ञानस्य चाचार-विचारवृत्योर्-
भाति प्रभावस्तव भालपट्टे।
नूनं सुमेधास्सुमना मनीषी
स्वाध्यायवांश्च प्रतिभासि मे त्वम् ॥19॥

कृषाणवेषस्य जनस्य तस्य
प्रश्नान् समाकर्ण्य युवा स विद्वान्।
सोल्लासचेतास्समुवाच सद्यः
प्रश्नोत्तरे नो चिरयन्ति सन्तः ॥20॥

सुश्लाघ्यजिज्ञास! मनोहराश!
मत्पितृनीकाश! मनोज्ञभाष!।
हृद्याभिलाष! प्रियवाग्विलास!
त्वामस्य वृत्तान्तमहं ब्रवीमि ॥21॥

पूतेऽस्मिन् भारते देशे, पुरासीद्विदुषां वरः।
श्रद्धानन्दाभिधस्स्वामी महाप्रज्ञो महामनाः ॥22॥

धर्मात्मा धीर-वीरात्मा महात्मा देशभक्तिमान्।
राष्ट्र-सम्मानरक्षार्थ यत्नांश्चक्रे स सर्वदा ॥23॥

ख्याते पञ्चाप-भूभागे शतद्रुसरितस्तटे।
भव्य तलवने ग्रामे जात आसीदसौ सुधीः ॥24॥

सुखानन्द-प्रपौत्रोऽसावासीत्क्षत्रियवंशजः।
पौत्रे गुलाबरायस्य पुत्रो नानकचन्द्रजः ॥25॥

बृहस्पतिरिति प्राख्यां जन्मन्यस्य पुरोहितः।
चकार व्यवहारार्थ मुंशीरामश्च जीवने ॥26॥

## अथ द्वाभ्यां युग्मकम्

मुंशीरामाभिधस्सोऽयं सेवमानस्स्वसंस्कृतिम ।
अध्युष्य जीवने स्वीये क्रमशश्चाश्रमत्रयम् ॥
यदा जग्राह संन्यासं दृढश्रद्धा-समन्वितः ।
तदा चकार नाम स्वं श्रद्धानन्द इति स्वयम् ॥27-28॥

प्राच्य-पाश्चात्यविद्यासु भूत्वाधीती विवेकवान् ।
वाक्कीलतां समारेभे कर्तुं जालन्धरे प्रधीः ॥29॥

बरेल्यां बाल्यकालेऽसौ दयानन्द-वचोऽमृतम् ।
यत्पपौ तेन सोऽवात्सीद् यावज्जीवं प्रभावितः ॥30॥

दयानन्दो महायोगी मानवता-विकासकः ।
आदर्शोऽभवदेतस्य समाजोद्धारकारकः ॥31॥

अत एवाश्रयंश्चासौ तन्मतं लोकविश्रुतम् ।
आर्यजाति-विकासेऽपि प्रयेते शुचिनात्मना ॥32॥

कीर्तिश्चास्य विचाराणा मार्यजाति-हितैषिणाम् ।
पञ्जाबे प्रससाराशु व्योमनि चन्द्रिका यथा ॥33॥

जालन्धर-समाजस्य प्रधानोऽसौ युवा वृतः ।
प्रभवन्ति गुणाः पुंसां सत्समाजे न संशयः ॥34॥

आर्य्यसमाज-संस्थानां हितमिच्छन्नसौ सुधीः।
मनसा कर्म्मणा वाचाभूत्तत्सेवासमर्पितः ॥35॥

अस्पृश्यता-विनाशाय वैदिकधर्म्म-पुष्टये।
प्रयेते बहु धीरोऽसौ कन्यानां शिक्षणाय च ॥36॥

पाश्चात्य-धर्म्मसंस्थाभिः कृतशिक्षालयेष्वसौ।
आर्य्य-धर्म्मतिरस्कारं दृष्ट्वाभूद् बहु चिन्तितः ॥37॥

यूनां च भारतीयानां तदानीन्तनशिक्षणे।
विचार्य्य विविधान् दोषान् तदुपायानचिन्तयत् ॥38॥

कन्यानां भारतीयानां बौद्धिकस्तर-वृद्धये।
जालन्धरे चकारासौ कन्याविद्यालयोद्भवम् ॥39॥

कन्याशिक्षाप्रसारार्थं दृढचित्तं सदाशयम्।
अदोविद्यालयाध्यक्षं देवराजं चकार सः ॥40॥

धर्मप्रचारके पत्रे स्वीये साप्ताहिकेऽप्यसौ।
लेखान् प्रकाशयामास कन्याशिक्षणपोषकान् ॥41॥

देवराजकृतैर्यत्नैः कन्याविद्यालयोऽप्यसौ।
सर्वतः ख्यातिमापन्नो महाविद्यालयोऽभवत् ॥42॥

## अथ द्वाभ्यां युग्मकम्

स्वामिनस्त्यक्तदेहस्य दयानन्दस्य तृप्तये।
संस्कृति-सभ्यता-दैवी-वाङ्मुख्ये शिक्षणालये ॥
लाहौरे स्थाप्यमानेऽपि मुंशीरामो महामनाः।
साहाय्यं सक्रियं चक्रे संस्कृतोन्नतिकाम्यया ॥43-44॥

## अथ पुनर्युग्मकम्

स्वामिना श्रीदयानन्देनोक्तां शिक्षणपद्धतिम् ।
संस्थापितेऽपि तन्नाम्ना तस्मिन् विद्यालये परम् ॥
उपेक्षितां विलोक्यासौ दुःखितश्चिन्तितश्च सन् ।
तत्प्रभून् बोधयामास नैवं कर्त्तुमनेकशः ॥45-46॥

तदीयाः किन्तु ते यत्नाः सफलास्तत्र नाभवन् ।
चित्ते लोकैषणालिप्ते नाध्यात्मिकक्रियोदयः ॥47॥

ततोऽसौ समितेस्तस्याः पृथग्भूतो निजेच्छया ।
सार्धं कतिपयैर्मित्रैः समचित्तैस्समाशयैः ॥48॥

ततोऽसौ चकमे चित्ते नित्यं गुरुकुलोद्भवम् ।
महर्षेरात्मतृप्त्यर्थं समाजस्य हिताय च ॥49॥

ऋषिं ध्यात्वा दयानन्दं नत्वा च परमेश्वरम् ।
तदर्थं योजनां चक्रे स्वीयैर्मित्रजनैस्समम् ॥50॥

## पुनर्युग्मकम्

संस्कृतं संस्कृतिं च स्वां भारतावनि-सभ्यताम् ।
उन्नेतुं दृढचित्तोऽसावर्पयज्जीवनं निजम् ॥
तदीयां स्थापनां कर्त्तु विनिश्चिक्ये महामतिः ।
मनसा कर्म्मणा वाचा सृष्टौ तस्य च सोऽलगत् ॥51-52॥

धर्म्मप्रचारके पत्रे सत्पूर्वे स्वप्रकाशिते ।
लोकान् गुरुकुलौचित्यं निजैर्लेखैरबोधयत् ॥53॥

तल्लेखैः प्रेरिता भूत्वा भारत-भारतीप्रियाः ।
आर्यसामाजिका नैके तन्मतं पर्यपोषयन् ॥54॥

नूरमहलवास्तव्यो जगन्नाथस्सदग्रणीः ।
वक्तव्यसहितं दानं तत्पार्श्वे प्रैषयन्मुदा ॥55॥

तत्परं विष्णुदासश्च लालान्तो मोहनोऽपि च ।
श्रीगोविन्दपुरस्थौ तौ चक्रतुर्दानघोषणाम् ॥56॥

वर्मा पातूरवास्तव्यः शिवरत्नोऽपि सत्प्रियः ।
उत्साहवर्धकं दानं घोषयामास तत्कृते ॥57॥

## भूयो युग्मकम्

देवराजादयोऽनेके जालन्धरनिवासिनः ।
रत्नारामादयश्चार्या गुजरांवालवासिनः ॥
अन्येऽपि बहवोऽभिज्ञा आर्य-धर्म्मानुयायिनः ।
गुरुकुलप्रतिष्ठायै साहाय्यं प्रतिजज्ञिरे ॥58-59॥

एतेनोत्साहसम्पन्नो मुंशीरामो महामनाः ।
चक्रे गुरुकुलोत्पत्त्यै प्रयत्नानधिकाधिकान् ॥60॥

श्रीगोविन्दपुरे चार्यसमाजस्याधिवेशने ।
प्रस्तावं पारयामास सर्वसम्मतिपूर्वकम् ॥61॥

आर्यप्रतिनिधीनां च पञ्चापप्रान्तवासिनाम् ।
सभायां प्रेषयामास तत्स्वीकृत्यै यथाविधि ॥62॥

## भूयो युग्मकम्

नवम्बरस्य षड्विंशे दिनाङ्के चेशुवत्सरे।
अष्टादशशतातीते अष्टानवतिपूरणे॥
सा सभा पारयामास तं प्रस्तावं शुभङ्करम्।
तत्स्वरूपप्रदानार्थं मुंशीरामं न्ययुङ्क्त च॥63-64॥

परं सावश्यकं मेनेऽपेक्षितं धनसङ्ग्रहम्।
तस्मिञ्जाते विधातव्यः श्रीगणेशोऽस्य कर्म्मणः॥65॥
ततोऽसौ प्राप्तनिर्देशो मुंशीरामो मुदान्वितः।
द्विगुणोत्साहसम्पन्नो लग्नोऽभूद् धनसङ्ग्रहे॥66॥

किन्तु जालन्धरस्थोऽसौ पर्याप्तं धनसङ्ग्रहम्।
स्वचित्ते दुष्करं मत्वा चकार भ्रमणे मतिम्॥67॥

गुरुकुल-प्रतिष्ठार्थं धनसङ्ग्रहकर्म्मणि।
दिवानिशं स लग्नस्वां व्यस्मरज्जीविकामपि॥68॥

साधयिष्याम्यहं कार्य्यं पातयिष्यामि वा तनूम्।
इत्यसौ निश्चयं चक्रे चित्ते, गुरुकुलप्रियः॥69॥

## भूयो युग्मकम्

यावच्च न भविष्यामि सफलो धनसङ्ग्रहे।
तावन्नैव प्रवेक्ष्यामि स्वकीये भवनेऽप्यहम् ॥
इति कृत्वा प्रणं धीरो निर्ययौ निजसद्मनः।
त्यजन्ति स्वं न सङ्कल्पं महान्तो विघ्निता अपि ॥70-71॥

## भूयो युग्मकम्

संस्कृतिं सभ्यतां स्वीयां भारतीयां सुरक्षितुम् ।
महत्त्वं बोधयल्लोकान् प्राच्यशिक्षणपद्धतेः ॥
तस्याश्च स्थापनां कर्त्तुं याचमानो धनं जनान् ।
असौ बभ्राम पञ्जाबे पाठयन् भारतीयताम् ॥72-73॥

मुम्बापुरीं ययौ चासौ तदर्थं स्वीकृतश्रमः ।
नगरं हैदराबादं लखनौनामकं तथा ॥74॥

साफल्यं लभमानोऽसौ स्वीये लक्ष्ये समन्ततः ।
आजगाम हरिद्वारं कामनापूरकं सताम् ॥75॥

लोके महत्त्वमत्रत्यं दृश्यं प्राकृतिकं तथा ।
विमृश्यासौ हरिद्वारं मेने गुरुकुलोचितम् ॥76॥

अत एवात्र येतेऽसौ धनप्राप्त्यै न केवलम् ।
अपित्वन्वेषणं चक्रे स्थानस्यापीह तत्कृते ॥77॥

## भूयो युग्मकम्

पारेगङ्गं तटे पूर्वे नीलधारान्तिकस्थिता।
निर्जना चातिविस्तीर्णा दुर्गमा काननावनी ॥
इष्टवैशिष्ट्य-सम्पन्ना तपोभूमिरिव स्थिता।
गुरुकुल-प्रतिष्ठायै भृशं तस्मायरोचत ॥78-79॥

काङ्गड़ीग्रामसंलग्नामसौ लिप्सुर्धराममूम्।
मिमेल स्वामिनं तस्या नजीबाबादवासिनम् ॥80॥

सोऽमनसिंहनामासीन्मुंशीत्युपाधिभूषितः।
धनी दानी च धर्मात्मा भूस्वामी संस्कृतप्रियः ॥81॥

तत्र गत्वा मिलित्वा तं स्वाभिप्रायं प्रकाशयन्।
मुंशीरामो ययाचे तामरण्यानीमुपेक्षिताम् ॥82॥

मुंशिरामस्य वार्तानामर्थेनासौ प्रभावितः।
संस्कृतं साधनं मेने रक्षितुं राष्ट्रगौरवम् ॥83॥

रक्षितुं न च शक्यन्ते विना संस्कृतशिक्षणम्।
सभ्यता संस्कृतिर्लोके भारतस्य च शेवधिः ॥84॥

संस्कृतस्य च शिक्षायै तस्माद् भारतवासिभिः।
सहयोगो विधातव्यो वपुषा मनसा श्रिया ॥85॥

इत्थं विचिन्त्य चित्तेऽसौ धर्म्मात्मा दानिनां वरः।
गुरुकुलाय तां भूमिं ददौ श्रद्धा-मुदन्वितः ॥86॥

तया भूम्या समं सोऽदाद् गुरुकुलस्य पुष्टये।
काङ्गड़ीग्राम-भूस्वामित्वञ्चापि निखिलं मुदा ॥87॥

एवमिष्टं धनं लब्ध्वा भूमिमिष्टामवाप्य च।
मूर्तं गुरुकुलं मेने मुंशीरामो मुदान्वितः ॥88॥

करोतीशोऽपि साहाय्यं जनस्याध्यवसायिनः।
मुंशीराम-प्रसङ्गोऽयं सूक्तेरस्या निदर्शनम् ॥89॥

पूर्णभूतप्रतिज्ञोऽसौ हर्षोत्साहसमन्वितः।
जालन्धरे गृहं स्वीयं प्राविशन्मित्रसत्कृतः ॥90॥

आर्यप्रतिनिधीनां सा सभा पञ्जाबवासिनाम्।
तस्याभिनन्दनं चक्रे तन्मुख्यं तं न्ययुङ्क्त च ॥91॥

ततोऽसौ तदनुज्ञातः काङ्गड़ीग्रामकानने।
तृण-पर्णकुटीरेषु गुरुकुलमतिष्ठिपत् ॥92॥

चक्षुः-ख-ग्रह-भूसङ्ख्ये वर्षे यीशुप्रवर्तिते।
मार्चमासाद्यसप्ताहे भव्यं चोद्घाटनं ह्यभूत् ॥93॥

व्यवस्थया ततस्तस्य शिक्षकाणां च शिक्षया।
शनैः शनैर्यशश्चन्द्रो दिदीपे तस्य सर्वतः ॥94॥

यथा यथा गता वृद्धिं लोके तत्कीर्त्ति कौमुदी।
वटुसङ्ख्याप्यवर्धिष्ट प्रतिवर्षं तथा तथा ॥95॥

## अथ चतुर्भिः कलापकम्

गङ्गादत्तो गुरुर्ज्येष्ठो विष्णुमित्रो महामतिः ।
मनस्वी बालकृष्णश्च भीमसेनश्च पण्डितः ॥
काशीनाथश्शास्त्रबुद्धिः सर्वशास्त्रविशारदः ।
नरदेवाभिधश्शास्त्री पद्मसिंहश्च धीधनः ॥
व्यवस्थाकुशलो देवो रामपूर्वो भविष्यदृक् ।
गोवर्धनो विकासात्मा नव्यतापक्षपोषकः ॥
एते चान्येऽप्यनेके वै तदानीन्तनशिक्षकाः ।
गुरुकुलोन्नतौ नित्यं लग्ना आसन्नहर्निशम् ॥96-99॥

अस्मिन्नेवान्तरालेऽसौ मुंशीरामो महामनाः ।
अर्पयामास सर्वस्वं स्वीयं गुरुकुलश्रिये ॥100॥

यतश्च दत्तसर्वस्वो दत्तात्मवेतनोऽपि च ।
महात्मेत्युच्यते स्मासौ सादरं सर्वसज्जनैः ॥101॥

भारत-भारतीभक्तं महर्षिं ज्ञानसागरम् ।
मत्वादर्शं दयानन्दं गुरुकुलं चचाल तत् ॥102॥

ऋषि-ख-ग्रह-भूसङ्ख्ये ततोऽब्दे यीशुचालिते ।
महाविद्यालयारम्भस्तत्र तेनैव कारितः ॥103॥

प्रामुख्ये प्राच्यविद्यानां तस्मिन् सत्यप्यसंशयम् ।
नव्यं ज्ञानं च विज्ञानं लोकदृष्ट्याप्यपाठ्यत ॥104॥

यद् यदावश्यकं मेने गुरुकुलस्य कीर्त्तये।
तत्तच्चक्रे यथाशक्ति महात्मासौ दृढव्रतः ॥105॥

राजतन्त्रस्वतन्त्रं सत् तदित्थं वृद्धिमापितम्।
उच्चशिक्षास्पदं चाभून्मूर्त्त भारतगौरवम् ॥106॥

तदीया प्रियता लोके ववृधे कीर्त्तिवर्धिनी।
द्विगुणा दिवसे रात्रौ जायमाना चतुर्गुणा ॥107॥

अमुयोत्साहमापन्नो महात्मासौ सुदूरदृक्।
विश्वविद्यालयीकर्त्तुं गुरुकुलं चकाङ्क्ष तत् ॥108॥

विषयाणां च विस्तारं महाविद्यालयस्तरे।
चकार चकमे चासौ नित्यं शिक्षाविदुत्तमः ॥109॥

तत्सहयोगिनः केचित् तत्प्रभावं न सेहिरे।
तस्मात्तदिष्टकार्येऽस्मिन् तद्विरोधं प्रचक्रिरे ॥110॥

वैराग्यभावना तस्माज्जातासीत्तस्य मानसे।
अतो जग्राह संन्यासं सर्वेषां पश्यतामसौ ॥111॥

श्रद्धया चात्तसंन्यासो राष्ट्र-सेवाचिकीर्षया।
श्रद्धानन्दो भवन्नाम्ना गुरुकुलं जहौ सुधीः ॥112॥

समाजस्याथ राष्ट्रस्य सेवायां व्यापृतोऽचिरम्।
राष्ट्र-स्वातन्त्र्यनेतॄणां मध्ये मूर्धन्यतां गतः ॥113॥

गुरुकुलाद् गते तस्मिन् उद्यानादिव मालिनि।
प्रभायां तत्र वैकल्यं सर्वैरेवान्वभूयत ॥114॥

तत्सहयोगिनौ विज्ञौ रामदेव-सुधाकरौ।
एकस्य तस्य कर्त्तव्यं कर्त्तुं द्वौ नैव शेकतुः ॥115॥

## अथ द्वाभ्यां युग्मकम्

विद्यार्थिनस्त एवासन् त एवासंश्च शिक्षकाः ।
विद्यालयस्स एवासीत् त एवासंश्च सेवकाः ॥
तं विना किन्तु ते सर्वे निष्प्रभावा इवाभवन् ।
नूनं सत्यमिदं प्रोक्तं ज्ञानं भारः क्रियां विना ॥116-117॥

नभो निशा च शोभेते चन्द्रेणोज्ज्वलकान्तिना ।
यथा तथा न ताराणां सहस्रैश्चार्बुदैरपि ॥118॥

## भूयो युग्मकम्

सभया कार्यकारिण्या गुरुकुलीयया तया।
सर्वयानुभवश्चक्रे यदायं चित्तकृन्तकः॥
गुरुकुलस्य रक्षायै विकासाय शुभाय च।
साग्रहं सादरं भक्त्या प्रार्थितोऽसौ तदा तया ॥119-120॥

सश्रद्धं चार्पिता तस्मै भूयो मुख्या पदद्वयी।
त्रुटीनां शोधनं काले कुर्वन्त्येव मनीषिणः ॥121॥

दृष्ट्वा तदाग्रहं स्वामी श्रद्धानन्दो महामनाः।
गुरुकुल-यशोवृद्धिं कर्त्तुं तत्रागतः पुनः ॥122॥

स्वारोपितस्य वृक्षस्य योग-क्षेम-चिकीर्षया।
भारं बभार भूयोऽसौ महात्मानो दयाधनाः ॥123॥

तस्मिन् समागते भूयः प्रेयः श्रेयः प्रसाधके।
मधुमास इवोद्यानं गुरुकुलं बभावलम् ॥124॥

वटवो गुरवः सर्वे सेवकाश्चाभिभावकाः।
आसन्नुत्साहसम्पन्नाः मत्वा भविष्यदुज्ज्वलम् ॥125॥

दुश्चिन्ताविगताभानि तेषां मुखानि सत्वरम्।
पद्मानीवोदिते सूर्ये विकासं लेभिरे पुनः ॥126॥

अथासौ सततं येते स्थिरकोषविवृद्धये।
विश्वविद्यालयीकर्त्तु गुरुकुलं स्वमुत्तमम् ॥127॥

क्षेत्रे देशे विदेशे च तदर्थ सोऽभ्रमत्सुधीः।
आहरच्च धनं तस्मै तन्महत्त्वं प्रसारयन् ॥128॥

## अथ त्रिभिः सान्दानितकम्

भारतीयत्वमुख्यानां ततो लोकोपयोगिनाम्।
विषयाणां च पाठ्यानां छात्र-व्यक्तित्ववर्धिनाम् ॥
तदर्थं च विभागानां सङ्ख्यानां च भूयसाम्।
शिक्षायै च परीक्षायै व्यवस्थायै पृथक् पृथक् ॥
तत्र कार्यालयानां च रूपरेखापुरस्सरम्।
सभायां सर्वसम्मत्या स प्रस्तावमपारयत् ॥129-131॥

संन्यासी कर्मयोगीत्थं श्रद्धानन्दो महामनाः।
विश्वविद्यालयीचक्रे गुरुकुलं तदेव सः ॥132॥

राजतन्त्रस्वतन्त्रोऽयं विश्वविद्यालयो महान्।
भारतीयसमाजाय दत्तस्तेनैव साधुना ॥133॥

तत्कालावश्यकान् सर्वान् प्रबन्धानकरोत्स्वयम्।
प्रस्तुवन्ति निजादर्शं कार्यं कृत्वा मनीषिणः ॥134॥

विश्वविद्यालयः कोऽपि शोधं, विना न शोभते।
इत्यसौ स्थापयामास विभागं वेदशोधकम् ॥135॥

अथासौ भारतीभक्तो देशस्वातन्त्र्यसिद्धये।
गान्धिनस्सहयोगार्थं चक्रे चेतसि निश्चयम् ॥136॥

## अथ युग्मकम्

देश-स्वातन्त्र्य-सिद्ध्यर्थं यत्नैस्तत्कृतसक्रियैः ।
क्रुद्धाङ्ग्लानां प्रकोपेण मा भूद् गुरुकुलाहितम् ॥
इत्यसौ चिन्तयंश्चित्ते दूरदृष्टिर्दृढव्रतः ।
व्यवस्थामखिलां कृत्वा जहौ गुरुकुलं स्वयम् ॥137-138॥

सम्बन्धेन स्वकीयेन स्वप्रियस्याहितं यदि ।
तत्तं प्रियं त्यजन्त्येव तद्धितार्थं मनस्विनः ॥139॥

गुरुकुलाद् गते तस्मिन् विश्वविद्यालयोपमात् ।
मुख्यो विश्वम्भरो भूतो नाथान्तो धीमतां वरः ॥140॥

आचार्य्यश्चाभवत्स्वामी सत्यानन्दो बुधाग्रणीः ।
उपाचार्य्यश्च विज्ञोऽभूद् रामदेवोऽनुभूतिमान् ॥141॥

एतेषां समवेतैश्च सत्प्रयासैर्मनीषिणाम् ।
गुरुकुले स्फुटीभूता विश्वविद्यालयाकृतिः ॥142॥

अत्रान्तरेऽत्यजत्स्वामी सत्यानन्दो निजं पदम् ।
अतस्तस्य पदं दत्तं रामदेवाय धीमते ॥143॥

नियुक्तोऽभूदुपाचार्यो विश्वनाथश्च बुद्धिमान् ।
वैश्वम्भरे हि मुख्यत्वे संस्थाभूदग्रगामिनी ॥144॥

समाजे प्रियता चास्या ववृधे चोपयोगिता।
अस्या अर्थदशा चापि जाता सन्तोषदायिका ॥145॥

विश्वविद्यालयत्वेन प्रस्तोतृपदसर्जना।
कृताभवन्महानन्दो नियुक्तस्तत्र कर्म्मठः ॥146॥

## भूयो युग्मकम्

एतावतैव कालेन श्रद्धानन्दप्रभावतः ।
एतस्यै वाङ्भूतानीतरगुरुकुलान्यपि ॥
झज्झरे च भटिण्डायां प्रान्ते पञ्जाबसंज्ञके ।
गुजराते च सूपायां प्रादुरासन् लघुस्तरे ॥147-148॥

देहल्यां दरियागञ्जे रग्घूमलस्य दानतः ।
कन्यागुरुकुलं चापि जज्ञे तस्यैव यत्नतः ॥149॥

उन्नतिरेतदीयेत्थं भवन्त्यासीदनारतम् ।
क्षेत्रे देशे च सर्वस्मिन् इदमीयं यशोऽभवत् ॥150॥

वेदाक्षिग्रहतारेशे यीशवीये सितम्बरे
घोराप्लावेन गङ्गाया ध्वंसो गुरुकुलेऽभवत् ॥151॥

तस्य स्थानपरीवर्त्त तद्-भीता अधिकारिणः ।
ऐच्छंस्तदर्थमक्रीणन् भूमिं चेमां निरापदम् ॥152॥

चयने क्रयणे भूमेरधिष्ठाता प्रशासकः ।
मुख्यो विश्वम्भरश्चक्रे दिवारात्रं परिश्रमम् ॥153॥

अस्मिन्नेवान्तराले हा दिल्ल्यां स्वामी महामनाः ।
श्रद्धानन्दो हुतात्माभूद् राष्ट्रैक्यं प्रतिपादयन् ॥154॥

## अथ षड्भिः कुलकम्

राष्ट्रस्य सुख-शान्त्यर्थं सर्वैर्देशनिवासिभिः।
प्रयासास्सन्ति कर्त्तव्याः सर्वधर्म्मावलम्बिभिः॥
सर्वेषामेव धर्म्माणां लक्ष्यमेकं सुधीरितम्।
कुत्रापि तात्त्विको भेदस्तेषु दृष्टो न सूरिभिः॥
पालयन्तु निजं धर्म्मं भारता भक्तिपूर्वकम्।
किन्तु ते नैव कुर्वन्तु परधर्मस्य निन्दनम्॥
निन्दया परधर्म्मस्य धर्मद्वेषो विवर्धते।
धर्म्मद्वेषो विवृद्धश्च राष्ट्रोन्नतिं प्रबाधते॥
रक्षन्तु राष्ट्रधर्म्मं स्वं सर्वधर्म्मानुयायिनः।
सर्वेषामेव धर्माणां राष्ट्रधर्म्मा विशिष्यते॥
तस्माद् राष्ट्रैकतासिद्ध्यै धर्म्मभेदस्त्यजेलिमः।
सन्दिशन्निति केनापि धर्म्मान्धेन हतोऽभवत् ॥155-160॥

कारितं धर्म्मसङ्घर्षं शासनायाङ्ग्लशासकैः।
शमयन्तममुं कश्चिद् धर्म्ममत्तो जघान हा ॥161॥

तदीयोत्सर्गवृत्तान्तं जले तैलमिव द्रुतम्।
प्रासरन्निखिले राष्ट्रे को रुन्द्धे गुणसौरभम् ? ॥162॥

तदा तस्यैव सम्बन्धादेषावापातिगौरवम्।
मुख्याश्च राष्ट्रनेतारस्सर्वेऽस्यामादरं दधुः ॥163॥

राष्ट्र-स्वातन्त्र्यसङ्ग्रामे श्रद्धानन्दे महात्मनि।
इत्थं वीरगतिं प्राप्ते संस्थैषा राष्ट्रियाभवत् ॥164॥

पश्चाद् गुरुकुलस्यास्य जयन्ती राजती शुभा।
आकाङ्क्षापूर्वकं सम्यङ् मानिता तत्प्रबन्धकैः ॥165॥

ततो विश्वम्भरोऽकस्मात् त्यागपत्रं स्वतो ददौ।
अधिष्ठाताप्यभून्मुख्यो रामदेवस्ततः परम् ॥166॥

तेनानिशं कृतैर्यत्नैः भूमिभागेऽत्र नूतने।
सहयोगेन सर्वेषां भूता भवननिर्मितिः ॥167॥

## अत्र भूयो युग्मकम्

ख-राम-ग्रह-तारेशे यीशाब्दे तत्प्रयत्नतः।
गुरुकुलस्वरूपोऽसौ तत्रत्यो वटभूरुहः॥
निर्विघ्ने भूमिभागेऽस्मिन् सादरं प्रतिरोपितः।
स्वं सर्वस्वं परित्यज्य रक्ष्यं रक्षन्ति सूरयः॥168-169॥

नित्यं गुरुकुले चासौ रामदेवस्ततः परम्।
सुव्यवस्थापयामास विश्वविद्यालयाकृतिम्॥170॥

पश्चात्स्वाधीनतायुद्धे रामदेवेऽपि सक्रिये।
अधिष्ठातास्य मुख्योऽभूत् तथाचार्यश्चमूपतिः॥171॥

तत्पश्चात्प्रमुखोऽधिष्ठाताभूत्सत्यव्रतः सुधीः।
देवशर्मा तथाचार्यो ज्ञातज्ञेयावुभावपि॥172॥

किन्तु वर्षद्वयेऽतीते देवशर्मा गतस्पृहः।
संन्यस्याभयदेवोऽभूत्स्वामी नूतननामभृत्॥173॥

परं सत्यव्रतायासैः दृढाभूदार्थिकी स्थितिः।
तेन प्रमाणिता चासीदायुर्वेदोपयोगिता॥174॥

ततोऽसौ देहदौर्बल्यादक्षि-वेद-ग्रहोडुपे।
पदं तत्याज यीशाब्दे क्रियाः सीदन्त्यनीरुजाम्॥175॥

## भूयो युग्मकम्

ततः परं पदे तस्मिन् प्रबन्धकारिणी सभा ।
मुंशीरामात्मजं धीरं कर्म्मठं निखिलप्रियम् ॥
दिल्लीनिवासिनं चेन्द्रं विद्यावाचस्पतिं बुधम् ।
श्रद्दधानं च संस्थायां न्ययुङ्क्ताग्रहपूर्वकम् ॥176-177॥

आचार्य्योऽभयदेवश्चाभूत्तदीयः सहायकः ।
इत्थमेषा पुनः संस्था ववृधे प्रगतेः पथि ॥178॥

तत्याज स्वल्पकालान्तेऽभयदेवो निजं पदम् ।
तत्परं तस्य च स्थाने बुद्धदेवो वृतोऽभवत् ॥179॥

सोऽपि चाग्रेऽल्पकालान्ते त्यागपत्रं ददौ पदात् ।
सहन्ते विरला एव पन्थानं कण्टकावृतम् ॥180॥

ततः प्रियव्रतो धीमान् वेदावाचस्पतिर्बुधः ।
आचार्य्यस्य पदं लेभे धीर-वीरो दृढव्रतः ॥181॥

स्वातन्त्र्ये च ततो लब्धे वैदेशिकाङ्ग्लशासनात् ।
भारतस्येव संस्थाया ववृधेऽस्या अपि स्तरः ॥182॥

क्षेत्रे देशे समाजे च संस्थैषा राष्ट्रिया मता ।
राष्ट्रस्य नायकानां च श्रद्धाभाजनतां गता ॥183॥

## भूयो युग्मकम्

विश्वविद्यालयैर्देशे शिक्षा-मध्यममण्डलैः ।
अस्या अशेषकक्षाणां परीक्षाणां च मान्यता ॥
स्वीकृता स्वपरीक्षाणां समाना मानपूर्वकम् ।
कस्तूरीगन्धसम्मानं गन्धज्ञाः के न कुर्वते ? ॥184-185॥

उपलब्ध्यानया चास्यां संस्थायामतिनूतनः ।
सञ्जातः प्राणसञ्चारश्छात्रेष्वध्यापकेषु च ॥186॥

जयन्ती काञ्चनी भव्या मानितोत्साहपूर्वकम् ।
राष्ट्रपतिश्च राजेन्द्रो ददौ दीक्षान्तभाषणम् ॥187॥

दृष्ट्वासौ गौरवं चास्याः प्रीतात्मा प्रीतिपूर्वकम् ।
राजकीयानुदानं स्वं लक्षमुद्रात्मकं ददौ ॥188॥

तत्परं महिमा चास्याः संस्थाया ववृधेऽनिशम् ।
राजकीयानुदानानि स्वीचक्रिरे च लेभिरे ॥189॥

मुख्याधिष्टातुरिन्द्रस्य प्रायो दिल्लीनिवासिनः ।
साहाय्यार्थं नियुक्तोऽभूदधिष्ठाता सहायकः ॥190॥

पण्डितो धर्मपालश्च प्रशास्ति-पटुतायुतः ।
संस्थायां निवसन्नित्यं तस्याभवत्सहायकः ॥191॥

इन्द्र - प्रियव्रतायासैर्धर्म्मपालानुपोषितैः ।
एतस्या आर्य्यसंस्थायाः प्रतिष्ठा ववृधेऽनिशम् ॥192॥

नित्यं दृढीकृता चैषा नित्यं लोकादृता तथा ।
नित्यं च प्रगतिं नीता संस्था सर्वप्रियाभवत् ॥193॥

विज्ञानशिक्षणस्यापि महाविद्यालयस्तरे ।
व्यवस्था विहिता यत्नैः संस्थास्तरविवृद्धये ॥194॥

उद्घाटनं तदीयं च स्वाशीर्वादपुरस्सरम् ।
श्रीजवाहरलालेन प्रधानमन्त्रिणा कृतम् ॥195॥

मुख्याधिष्ठातृ कर्त्तव्यं पूरयित्वा बहूस्समाः ।
उपदिशन्निव त्यागं तत्याजेन्द्रो निजं पदम् ॥196॥

## पुनर्युग्मकम्

सभया कार्यकारिण्या तत्परं बुद्धिपूर्वकम् ।
कर्मण्यः प्रतिभाशाली क्षेत्रेऽस्मिन्नतिविश्रुतः ॥
राज्यसभासदस्यश्च मनोनीतो महामतिः ।
संस्थामूलपदेऽमुष्मिन् भूयः सत्यव्रतो वृतः ॥197-198॥

अमुष्यैव प्रशास्तृत्वे राजकीय प्रसादतः ।
संस्थेयं प्रोन्नता भूत्वा विश्वविद्यालयोऽभवत् ॥199॥

तदीयं तत्पदं चापि जातं कुलपतेः पदम् ।
तस्मिन् पदे च तस्यैव नियुक्तिरभवत्पुनः ॥200॥

अथाचार्यपदं जातमुपकुलपतेः पदम् ।
तस्मिंस्तदातनाचार्यो नियुक्तोऽभूत्प्रियव्रतः ॥201॥

सर्वकारानुसारेण विश्वविद्यालयाकृतिः ।
परिष्कृता स्फुटा चाभूत्तस्मिन् द्वये प्रशासति ॥202॥

विश्वविद्यालयो भूत्वा संस्थेयं सुव्यवस्थिता ।
प्रत्यब्दमुन्नतिं चक्रे सम्प्राप्तशासनाश्रया ॥203॥

तदीयकार्यकालान्ते तस्मिन् कुलपतेः पदे ।
विज्ञस्तदातनाचार्यो नियुक्तोऽभूत्प्रियव्रतः ॥204॥

तस्य कार्यावधौ पूर्णे काले काले च तत्परम् ।
अनेकैरत्र विद्वद्भिर्भूषितेयं पदद्वयी ॥205॥

## अथ त्रिभिः सान्दानितकम्

पण्डितो रघुवीरश्च सत्यकेतुस्तथैव च।
बलभद्रकुमारश्च श्रीसुभाषो महाशयः ॥
मनीषीरामनाथश्चाधीती वैदिक-वाङ्मये।
चन्द्रभानुश्च मेधावी वाग्मी विज्ञो निरूपणः ॥
रामप्रसादसंज्ञश्च वेदविद्याविशारदः।
प्रमुखास्सन्ति तेष्वेते कृतकार्या मनस्विनः ॥206-208॥

## अथ षड्भिः कुलकम्

तत्राचार्यपदे चास्मिन् उपकुलपतेः पदे।
आतिथेयोऽनहम्मन्यो व्यवहारविदां वरः॥
सत्यनिष्ठोऽतिकर्मण्यः शास्त्र-शिक्षाजुषां वरः।
मनीषी सत्त्वसम्पन्नो मेधावी सुधियां वरः॥
भारत-भारती-भक्तो वेद-विद्याविदां वरः।
सभायां विदुषां मान्यः कक्षायां छात्रवन्दितः॥
संस्कृतेर्भारतीयायाः सभ्यतायास्तथात्मनः।
तथा संस्कृतभाषाया रक्षाकाणां धुरि स्थितः॥
दयालुर्दुःखिते दीने यस्मिन् कस्मिञ्जनेऽप्यलम्।
निर्लोभस्सर्वमान्यश्च पटुश्चापि प्रशासने॥
विश्वविद्यालयोत्थाने दत्तचित्तो दिवानिशम्।
आचार्यो विद्यते शास्त्री वेदप्रकाशनामकः॥211-216॥

## अथ युग्मकम्

प्रस्तोतुश्च पदेऽत्रास्ति प्रशास्तिकुशलो बुधः।
परीक्षापावनो धीरो विदुषां मानवर्धनः॥
मनसा कर्मणा वाचा शुचिश्चापि स्वजीवने।
डॉक्टरश्श्रीमहावीरो वेद-व्याकृतिपण्डितः ॥217-218॥

एतेषां संहितैर्यत्नैर्विश्वविद्यालयोऽधुना।
विधत्ते प्रगतिं नित्यं प्रतिष्ठां प्रथयन्निजाम् ॥219॥

प्रारभ्य प्रथमां कक्षां यावत्कक्षामिहान्तिमाम्।
छात्राणां पाठनार्थं च व्यवस्थास्ते यथाविधि ॥220॥

अत्र च देहरादूने कन्या-गुरुकुलद्वयी।
एतस्यैवाङ्गभूतास्ते कन्याशिक्षां वितन्वती ॥221॥

छात्राः सहस्रसङ्ख्यायां शिक्षकाः शतसङ्ख्यकाः।
अत्र चान्ये शतप्रायाः विद्यन्ते कर्मचारिणः ॥222॥

## अथ कलापकम्

योगः संस्कृतसाहित्यं वैदिकं वाङ्मयं शुभम् ।
दर्शनं काव्यशास्त्रं च व्याकरणं च वैद्यकम् ॥
हिन्दीतिहासमङ्ग्रेजी देहशिक्षा प्रबन्धनम् ।
रासायनं च विज्ञानं वानस्पत्यं च जान्तवम् ॥
भौतिकं मानसं चापि सङ्गणकं च साङ्ख्यिकी ।
पर्यावरण विज्ञानं गणितं-चापि वैदिकम् ॥
इत्येते विषयाः सम्यग् यथाकालं यथोचितम् ।
विश्वविद्यालयेऽध्यत्वे पाठ्यन्ते योग्यशिक्षकैः ॥223-226॥

सहस्रैर्ग्रन्थरत्नैश्च पत्रैश्च पत्रिकादिभिः ।
समृद्धः सत्प्रबन्धश्च शोभते पुस्तकालयः ॥227॥

सुतरां चैष सम्पन्नो नानान्यगुणरश्मिभिः ।
विश्वविद्यालयादित्यो हरत्यज्ञानजं तमः ॥228॥

प्राच्यं ज्ञानं च विज्ञानं वेदयन्नात्मनो जनान् ।
सर्वत्र तनुते लोके भारतभूमि-गौरवम् ॥229॥

नव्यमन्यच्च विज्ञानं विश्वविद्वद्गवेषितम् ।
तस्मिन्नप्यादरं कुर्वन् तद्विकासाय चेष्टते ॥230॥

भारतस्य च धर्म्मस्य सभ्यतायाश्च संस्कृतेः ।
विस्तारयन् गुणग्रामं स्वलक्ष्यं पूरयत्ययम् ॥231॥

विश्वविद्यालयोदन्तो मदुक्तोऽयं समासतः।
शमितवान् भवेन्नूनं त्वज्जिज्ञासामिहोत्थिताम् ॥232॥

इत्यलं निगदन्तं तं युवानं साधुचेतसम्।
अवादीत्सोऽतिथिः प्रज्ञः प्रीतात्मा प्रीतिपूर्वकम् ॥233॥

हे तात ! त्वद्वचोधाराजलस्नातस्य मे मतिः।
जातास्ति धौतजिज्ञासाकर्दमा च गतश्रमा ॥234॥

पृथिव्यां भारतं यावद् यावद् गङ्गा च भारते।
विश्वविद्यालयस्तावत् कीर्तिशाली भवेदयम् ॥235॥

प्रसन्नोऽहमतो हार्दान् धन्यवादान् ददामि ते।
अथ द्रष्टुमिमं यामि त्वं सुखी भव सर्वदा ॥236॥

इत्थं तमुक्त्वा दयिताद्वितीयो
नमस्कृतस्तेन पुनः कृताशीः।
स विश्वविद्यालयदर्शनार्थं
चचाल चेतस्यनुभूतहर्षः ॥237॥

उद्यानशोभामवलोकयन्तौ
तौ मञ्जरीगन्धसुतृप्तचित्तौ।
तत्र व्यवस्थां रुचिरां विलोक्य
प्रासीदतामात्मनि चात्मतुष्टौ ॥238॥

छात्राः स्वकक्षासु पठन्त आसन्
प्राध्यापकाः पाठनकार्य्यलग्नाः।
स्वाध्यायलग्नाश्च तरूनधोऽधो
विद्यार्थिनः केचन दृश्यमानाः ॥239॥

ग्रन्थालये ग्रन्थविलोकलक्ष्या
आचारभद्राश्च विचारभद्राः।
छात्रा अनेके गुरवश्च केचित्
तच्चित्ततोषं जनयन्त आसन् ॥240॥

छात्राः प्रतीता गुरुभक्तियुक्ता
अध्यापकाश्छात्रहितानुरक्ताः।
परस्परं ते हृदि भावयन्तः
कल्याणमार्गेण चलन्त आसन् ॥241॥

विज्ञानमाङ्ग्लामपि ते पठन्तः
स्वराष्ट्रभाषादरवन्त आसन्।
जना विदन्तोऽन्यगुणान् मनोज्ञान्
त्यजन्ति नैवात्मगुणान् महान्तः ॥242॥

कार्यालयीयामपि तौ व्यवस्थां
विलोक्य तोषं हृदयेऽन्वभूताम्।
धर्मप्रिये स्वामिनि सत्यनिष्ठे
भवन्ति भृत्या अपि कर्मनिष्ठाः ॥243॥

आर्षोक्ति-मुक्तामणिरत्नदीपैः
दीप्ते सभासद्मनि सञ्चलन्त्याम्।
विचारगोष्ठ्यामुपविश्य कञ्चित्
कालं कृतार्थाविव तावभूताम् ॥244॥

विचारणाया विषयोऽयमासीद्
यत्संस्कृतं लोकततं कथं स्यात्।
बभाषिरेऽस्मिंश्च बुधा अनेके ऽ
नेकानुपायानवबोधयन्तः ॥245॥

वेद प्रकाशादिमनीषिणोऽमी
स्वभाषणं संस्कृतवाचि चक्रुः।
बभूवतुस्तेन हि तौ प्रसन्नौ
गुणैः प्रसीदन्ति जना गुणज्ञाः ॥246॥

ततो विनिर्गत्य परिभ्रमन्तौ
तत्रत्यशोभामवलोकयन्तौ।
प्रफुल्लचित्तौ च समालपन्तौ
न्यवर्तिषातां स्वनिवासभूमौ ॥247॥

इत्थं प्रसन्नवदनौ कृतनित्यकार्यौ
तौ जम्पती च विहिताशनपानकार्यौ।
संस्थामिमामतिचिरं हृदि संस्मरन्तौ
निद्रां तनुश्रमहरीं शनकैरगाताम् ॥248॥

●

इति
डॉक्टर हरिनारायण दीक्षितविरचितं
गुरुकुलकाङ्गड़ीविश्वविद्यालयीयं नाम काव्यं सम्पूर्णम्॥

अथ

डॉक्टर हरिनारायणदीक्षित विरचितं

गुरुकुल काङ्गड़ी विश्वविद्यालयीयम्

# काव्य का स्वोपज्ञ हिन्दी अनुवाद

हरिद्वार तीर्थ में आए हुए किसी सपत्नीक व्यक्ति के, साधु-संतों के दर्शनों से तृप्त हुए, चित्त में गुरुकुल कांगड़ी विश्वविद्यालय को देखने की इच्छा हुई ॥1 ॥ और इसके बाद वे दोनों पति-पत्नी आपस में विचार और निश्चय करके रास्ते के मठों, मंदिरों और घाटों को छोड़ते हुए तथा ज्ञान की उस गंगा के विषय में सोचते हुए उसकी ओर जाने वाले मार्ग पर चल पड़े ॥2 ॥ रिक्शा पर बैठकर वे दोनों आराम से लगभग घड़ी भर के समय में गुरुकुल कांगड़ी विश्वविद्यालय की पवित्र तथा आम के वृक्षों से सुहावनी सीमा में पहुंच गए ॥3 ॥ राहगीरों को उनके गन्तव्य पर पहुंचाकर उनकी मदद करने वाले, पसीने से भीगे हुए चेहरे वाले और हांफते हुए उस रिक्शाचालक को दीनों पर दया करनेवाले उस महापुरुष ने उसकी चाहत से अधिक रुपये देकर बेहद खुश कर दिया ॥4 ॥ ज्ञान से प्रेम करने वाले, ज्ञान को मार्ग को देखने की इच्छा रखनेवाले, ज्ञान को अपने हृदय में पवित्र माननेवाले और इसीलिए विश्वविद्यालय को देखने की उत्कण्ठा लिये वे दोनों उसके अंदर धीरे-धीरे प्रविष्ट हुए ॥5 ॥ विश्वविद्यालय के भीतर सड़क के दोनों किनारों पर वृक्ष खड़े थे; मंद-मंद चलती हुई हवा से उनकी भुजाओं जैसी शाखाएं हिल रही थीं; फलस्वरूप उनसे सुगंधित पुष्प गिर रहे थे; इससे ऐसा लग रहा था, मानो अतिथि-सत्कार करने में कुशल लोग वहां उन दोनों का स्वागत कर रहे हों ॥6 ॥ वहां खिलते हुए

फूलों से लदी लताओं पर बहुत से भंवरे गुञ्जार कर रहे थे। यह देखकर ऐसा लग रहा था मानो उन भंवरों के बहाने वनिताओं की भांति उन लताओं ने उन दोनों के स्वागत में कोई गीत गाना शुरू कर दिया हो ॥7॥ यहां आगे चलते हुए उन दोनों ने देखा कि एक जगह आम के वृक्ष की जड़ के समीप सुंदर वेष-भूषा धारण किए हुए और अपने एक हाथ में पुस्तक लिये हुए कोई व्यक्ति बैठा हुआ है ॥8॥ गोरे रंगवाले, लंबे कदवाले, सुंदर बालोंवाले और चौड़े माथेवाले उस व्यक्ति ने इन दोनों को कोई विशिष्ट अतिथि समझकर उठकर श्रद्धापूर्वक प्रणाम किया ॥9॥ और इनसे पूछा कि आप लोग कहां से आए हैं ? और क्या चाहते हैं ? यहां आप लोगों की मैं क्या सेवा करूं ? मुझे ऐसा लगता है कि आप लोग यहां पहली बार आए हैं ॥10॥ 'जहां सुंदरता होती है वहां गुण भी रहते हैं' इस सूक्ति को उस व्यक्ति में सार्थक समझते हुए और इसीलिए उससे प्रसन्न हुए तथा उसी से वहां के विषय में जानने की इच्छा करते हुए वे दोनों वहां बैठ गए ॥11॥ अपनी वेष-भूषा से किसान लगने वाले उस व्यक्ति ने उससे कहा कि हे सुहृदय ! हम दोनों की इच्छा को सुनो। हम दोनों पति-पत्नी हरिद्वारपुरी की विशेषताओं को देखने के लिए बड़ी दूर से आए हैं ॥12॥ उन में से अनेक विशेषताओं को हम दोनों देख चुके हैं। उसी क्रम में आज इस विश्वविद्यालय को देखने की इच्छा उठी; और वह हम दोनों को यहां ले आई। यहां प्राणी अपनी इच्छाओं के अधीन होकर ही तो भ्रमण करता है ॥13॥ मुझे लगता है कि संपूर्ण देश में तुम्हारा यह विश्वविद्यालय महान् है। इसीलिए मैं आज यहां आया हूं। मेरे कान इसका इतिहास सुनने के लिए समुत्सुक हो रहे हैं ॥14॥ इस विश्वविद्यालय का संस्थापक कौन है ? इसका उद्देश्य क्या है ? यहां विद्यार्थी कितने हैं ? अध्यापक कितने हैं ? और पढ़ाए जानेवाले

विषय कौन-कौन से हैं ? तथा यहां का प्रबंध किस प्रकार किया जाता है ? ॥15॥ यहां के आचार्य पद पर कौन-कौन से लोग प्रतिष्ठित हो चुके हैं ? और इस समय कौन प्रतिष्ठित है ? और यह विश्वविद्यालय अपने क्षेत्र और अपने राष्ट्र के लिए कौन-सी कल्याणकारिणी दृष्टि प्रदान करता है ? ॥16॥ और क्या यह विश्वविद्यालय इस समय में मानव समाज के लिए सुसभ्य, कर्त्तव्यनिष्ठ, स्वदेशभक्त और भारतीय संस्कृति के संरक्षक जनों को जन्म दे रहा है ? ॥17॥ ये तमाम सवाल यहां आकर मेरे मन में प्रवेश कर रहे हैं; और मैं इनका समाधान किसी भी व्यक्ति से पाना चाहता हूं। हे वत्स ! यदि तुम्हीं मेरी इस इच्छा को पूरा कर देते हो, तो ईश्वर तुम्हें सुख प्रदान करेगा ॥18॥ तुम्हारे मस्तक पर ज्ञान, सदाचार और सद्विचारों का प्रभाव झलक रहा है। मुझे तुम निश्चय ही अच्छे मनवाले, मेधावी, मनीषी और स्वाध्यायशील प्रतीत हो रहे हो ॥19॥ किसान की वेष-भूषावाले उस व्यक्ति के सवालों को सुनकर उल्लसित हुए हृदयवाला वह विद्वान् युवक तुरंत बोला; क्योंकि सत्पुरुष प्रश्न का उत्तर देने में विलम्ब नहीं करते हैं ॥20॥ उसने कहा कि हे प्रशंसनीय जिज्ञासा करनेवाले ! हे मनोहर आशा रखनेवाले ! हे मेरे पितृतुल्य ! हे सुंदर भाषा बोलने वाले ! हे हृदय को अच्छी लगनेवाली अभिलाषाओं वाले ! और हे प्रिय वचन बोलने वाले महाशय ! आपको मैं इस विश्वविद्यालय का इतिहास बताता हूं; सुनिए ॥21॥–

अनेक वर्ष पहले इस पवित्र भारत देश में विद्वज्जनों में अग्रगण्य, परम बुद्धिमान्, महामना, स्वामी श्रद्धानंद जी हुए थे ॥22॥ वह धर्मात्मा थे; धीरात्मा थे; वीरात्मा थे; महात्मा थे; देशभक्त थे; और उन्होंने भारत राष्ट्र के सम्मान की रक्षा के लिए सदा ही प्रयत्न किए थे ॥23॥ विख्यात पंजाब प्रांत में सतलजनदी

